अथ

# देवीपुष्पाञ्जलिस्तोत्रं

प्रारभ्यते ।

श्रीगणेशाय नमः ॥ ऐंनमः ॥
भगवती भगवत्पदपंकजं भ्रमर
भूतसुरासुरसेवितम्॥ सुजनमा
नसहंसपरिष्कृतंकमलया ऽम
लयानिभृतंभजे ॥ १ ॥ तेउ
भेअपि वन्देहं विघ्नेशकुलदैव

ते ॥ नरो नागाननस्त्वेको नर स्तो.
स्सिंहाननोपरः ॥ २ ॥ हरिगु
रुपदपद्मे चित्तपद्मानुरागाद
धिगतपरिभागे सन्निधायादरे
ण ॥ तदनुचारिकरोमि प्रीतये २
भक्तिभाजां भगवति पदपद्मे

पद्यपुष्पांजलिं ते ॥३॥ केनेतर
च्चिता: कुतो न निहिता:शुंभाद
यो दुर्मदा: केनैते बत पालिता
इति हि तत्प्रश्ने किमाचक्ष्महे॥
ब्रह्माद्या अपि शंकिता: स्वविष
ये यस्या:प्रसादावधि प्रीता सा

महिषासुरप्रमाथिनी सिद्धादि
वंद्यावतु ॥ ४ ॥ पातु श्रीस्तु
चतुर्भुजा किमु चतुर्बाहौ महौ
जोभुजान्धत्तेष्टादशधाहिकारण
गुणाः कार्यै गुणारंभकाः ॥
सत्यं दिक्पातितुल्यसंख्यभुज

भृच्छंभुस्स्वयंभूस्स्वभूधामैकप्राति
पत्तये किमथवा पातुंदशा
ष्टौदिशः ॥ ५ ॥ प्रीत्या
ष्टादशसांमितेषु युगपद्दीनेषुदा
तुंवरांस्त्रातुंवोभयताविभातिभग
वत्यष्टादशैतान् भुजान् ॥

 यद्यष्टादशधाभुजांस्तु बिभ्रतः 
 काली सरस्वत्युभे संहत्यैक्य
मिहानयोः प्रथयितुं सा त्वंरमे
रक्षमाम् ॥ ६ ॥ ॥ अयि गिरिनं
दिनि नंदितमोदिनि विश्ववि 
नोदिनि नंदिनते ॥ गिरिवरविं

ध्यशिरोधिनिवासिनि विष्णुवि
लासिनि जिष्णुनुते॥भगवति हे
शितिकंठकुटुंबिनि भूरिकुटुं
बिनि भूतकृते॥जयजय हे महि
षासुरमर्दिनि रम्यकपर्दिनि शै
लसुते ॥ ७ ॥ सुरवरवर्षिणिदु

 र्दुरधार्षिणि दुर्मुखमार्षिणि हर्षर 
 ते त्रिभुवनपोषिणि शंकरतोषि
णि कल्मषमोषिणि घोषरते ॥
दनुजनिरोषिणि दुर्मदरोषिणि
दुर्मदशोषिणि सिंधुसुते ॥ जय 
जय हे महिषा० ॥८॥ अयि ज

गदंब कदंबवनाप्रियवासिनिवा
सिनि हासरते॥ शिखरिशिरोम
णितुंगहिमालयशृंगनिजालय
मध्यगते ॥ मधुमधुरे मधुकै
टभभंजिनि कैटभभंजिनि रास
रते॥जयजय हे महिषा० ॥ ९ ॥

अयि निजहुंकृतमात्रनिराकृत
धूम्रविलोचनधूम्रशते ॥ समर
विशोषितशोणितबीजसमुद्भ
वशोणितबीजलते ॥ शिवशिव
शुंभनिशुंभमहाहवदार्पितभूत
पिशाचपते ॥ जयजय हे० १०॥

अयि शतखंडविखंडितरुंडवि
तुंडितशुंडगजाधिपते॥ रिपुगज
गंडविदारणचंडपराक्रमशौंड
मृगाधिपते॥ निजभुजदंडनिपा
तितचंडविपाटितमुंडभटाधिप
ते॥ जयजयहे० ॥११॥ धनुरनु

पु. षंगरणक्षणसंगपरिस्फुरदंगरण स्तो.
७ त्कटके ॥ कनकपिशंगलसत्क
टिसंगरसद्भरशृंगहतावटुके ॥
कृतचतुरंगबलक्षितिरंगघटद्ब
हुरंगरटद्बटुके ॥ जयजय हे० ॥ ७
॥ १२ ॥ अयिरणदुर्मदशत्रुवधो

द्धुरदुर्द्धरनिर्भरशक्तिधृते ॥ च
तुरविचारधुरीणमहाशयदूत
कृतप्रमथाधिपते ॥ दुरित
दुरीहदुराशयदुर्मददानवदूतदु
रंतगते ॥ जयजय हे० ॥ १३ ॥
अयिशरणागतवैरिबधूवरवीर

पु. वराभयदायिकरे ॥ त्रिभुवनम स्तो.
८ स्तकशूलविरोधिशिरोधिकृता
मलशूलकरे ॥ धिमिधिमिताम
रदुंदुभिनादमुहुर्मुखरीकृतदिङ्ङ्
करे ॥ जयजय हे० ॥१४॥ सुरल ८
लनाततथोततथोततथोभिनयो

त्तरनृत्यरते ॥ कृतकुकुथाकुकुथो
गडदादिकतालकुतूहलगानरते।
धुधुकुटधुःकुटधिंधिमिधिमितध्व
निधीरमृदंगनिनादरते । जय
जय हे० ॥१५॥ जयजयशब्दज
यजयशब्दपरस्तुतितत्परविश्व

पु. नुते॥ झणझणझिंझिमिझिंकृतनू स्तो.
९ पुरसिंजितमोहितभूतपते। नटि
तनरार्द्धनटीनटनायकनाटकना
टितनाटचरते॥जयजयहे०।१६।
अयि सुमनःसुमनःसुमनःसुम ९
नस्सुमनोरमकांतियुते। श्रितर

जनीरजनीरजनीरजनीरजनी
करवक्त्रवृते ॥ सुनयनविभ्रमरभ्र
मरभ्रमरभ्रमरभ्रमराभिहते । ज
यजयहे० १७॥ महितमहाहवम
ल्लमतल्लिकवल्लितरल्लितभल्लिर
ते । विरचितवल्लिकपल्लिकमल्लि

पु. काझिल्लिकाभिल्लिकवर्गवृते ॥ श्रु स्तो.
१० तकृतफुल्लसमुल्लसितारुणतल्ल
जपल्लवसल्ललिते ॥ जयजय हे०
॥१८॥अविरलगंडगलन्मदमेदु
रमत्तमतंगजराजगते । त्रिभुवन १०
भूषणभूतकलानिधिरूपपयोनि

धिराजसुते ॥ अयि सुदतीजन
लालसमानसमोहनमन्मथरा
जमते ॥ जयजयहे० ॥१९॥ क
मलदलामलकोमलकांतिबला
कलितातुलभालतले ॥ सकल
विलासकलानिलयक्रमकेलि

पु. कलत्कलहंसकुले ॥ अलिकु स्तो.
११ लसंकुलकुंतलमंडलमौलिमि
लद्बकुलालिकुले॥ जयजय हेम
हि० ॥२०॥ कलमुरलीरववीजि
तकूजितलज्जितकोकिलमंजुम ११
ते ॥ मिलितमिलिंदमनोहरगुं

जितरंजितशैलनिकुंजगते ॥ नि
जगणभूतमहाशबरीगुणरंगण
संभृतकेलितते॥जयजय हेम०
॥ २१ ॥ कटितटपीतदुकूलवि
चित्रमयूरतिरस्कृतचंद्ररुचे ॥
प्रणतसुरासुरमौलिमणिस्फुर

पु. दंसलसन्नखचंद्ररुचे ॥ जितक स्तो.
१२ नकाचलमौलिपदोज्झितदुर्द्धर
निर्झरतुंगकुचे ॥ जयजय हेम०
॥२२॥ विजितसहस्त्रकरैकसह
स्त्रकरैकसहस्त्रकरैकनुते ॥ कृत १२
सुरतारकसंगरतारकसंगरतार

कसूनुनुते ॥ सुरथसमाधि
समानसमाधिसमानसमाधि
षुजाप्यरते ॥ जयजय हेमहि०
॥ २३ ॥ पदकमलंकरुणानिलये
वरिवस्यतियोनुदिनं सुशिवे ॥
अयिकमले कमलानिलये कम

पु. लानिलयः सकथंनभवेत् ॥ तव स्तो.
१३ पदमेवपरंपदमस्मिसुशीलयुतो
मम किन्नशिवे ॥ जयजय हे
महि० ॥ २४ ॥ कनकलसत्कल
शीकजलैरनुषिंचातितेंगणरंग १३
भुवं ॥ भजति सकिन्नशचीकुच

कुंभतटीपरिरंभसुखानुभवम् ॥
तव चरणं शरणं करवाणिमृडा
निसदामयिधेहि शिवं।जयजय
हे०२५॥ तवविमलेंदुकलंवदनेंदु
मलंकलयन्ननुकूलयते ॥ किमुपु
रुहूतपुरेंदुमुखीसुमुखीभिरसौ

पु. विमुखीक्रियते ॥ ममतुमतं स्तो.
१४ शिवमानधनेभवतीकृपयाकि
मुनक्रियते ॥ जयजय हेमहि०
२६ ॥ अयिमायिदीनदयालुतया
कृपयैवतयाभवितव्यमुमे ॥ अ १४
यिजगतोजननीतिजयाशमया

पितथानुमितासिरमे । नयदुचि
तंनभवत्युररीकुरुतादुरुताप
मपाकुरुमे॥जयजय हे०॥२७॥
स्तुतिमितःस्तिमितः सुसमा
धिना नियमितोयमितोनुदिनं
पठेत् ॥ परमया रमयासनि

 षेव्यते परिजनोरिजनोपिचतं 
 भजेत् ॥ २८ ॥ रमयतिकिल
कर्षैं तेषुचित्तं नराणामवरयइव
यस्माद्रामकृष्णः कवीनाम् ॥ 
अकृतसुकृतगम्यंरम्यपद्यैकह

र्यस्तवनमवनहेतोः प्रीतये वि
श्वमातुः ॥ २९ ॥

इति श्रीदेवीपुष्पाञ्जलिस्तोत्रं समाप्तम्।

इदं पुस्तकं श्रीकृष्णदासात्मजक्षेमराजेन मुम्बय्यां स्वकीये 'श्रीवेङ्कटेश्वर'
स्टीम्-मुद्रणालये मुद्रितं संवत् १९७४ आश्विन शु० ८

यह पुस्तक खेमराज श्रीकृष्णदासने बम्बई खेतवाडी ७ वीं गली खम्बाटा लैन, निज "श्रीवेङ्कटेश्वर" स्टीम्-प्रेसमें अपने लिये मुद्रित कर यहीं प्रकाशित किया।

इति

देवीपुष्पाञ्जलिस्तोत्रं

सम्पूर्णम् ।

